✻ श्रीसर्वेश्वरो जयति ✻



✻ श्रीभगवन्निम्बार्काचार्याय नमः ✻

श्रीसुदर्शनचक्रावतारश्रीमज्जगद्गुरुभगवन्निम्बार्काचार्य-

विरचित—

# प्रातः स्तवराजः



"युग्मतत्त्व-प्रकाशिकाख्यया व्याख्यया संवलितः"

।। श्री सर्वेश्वरो जयति ।।

॥ श्रीभगवन्निम्बार्काय नमः ॥

श्रीसुदर्शनचक्रावतारश्रीमज्जगद्गुरुभगवन्निम्बार्काचार्य-
विरचित

# ॥ प्रातःस्तवराजः ॥

आद्याचार्यपादपीठाधीश्वरानन्तश्रीविभूषित—जगद्गुरु श्री
निम्बार्काचार्य श्री "श्रीजी" श्रीराधासर्वेश्वरशरण-
देवाचार्यप्रणीत—'युग्मतत्त्व प्रकाशिका'
व्याख्ययोपेतः ।



प्रकाशकः—

**अखिल भारतीय श्रीनिम्बार्काचार्यपीठ, निम्बार्कतीर्थ**
(सलेमाबाद) किशनगढ़ (राजस्थान)

[प्रथमावृत्ति—श्रीकृष्ण जन्माष्टमी वि. सं. २०१७, सन् १९६०]

श्रीकृष्णजन्माष्टमी विक्रमाब्द २०४९ } द्वितीयावृत्ति सन् १९९२ { न्योछावर ४) रु०

# * समर्पणम् *



निखिल—निगमागम—प्रतिपाद्यमान—
सौन्दर्य-माधुर्याद्यशेषगुण-सिन्धो !
परमप्रेमात्मकयुगल-चन्द्र !
हे श्री सर्वेश्वर प्रभो !

यथा भवदीरणयैव निर्मितः स्तवो
ऽयमात्मपरिकराद्याचार्यवर्यैस्तथैवाऽनेन
श्रीमच्चरण-चञ्चरीकेन युग्मतत्त्व-
प्रकाशिकेयं कारिता भवतैव

'सर्वं त्वदीयं न ममास्ति किञ्चित्'
अतः 'त्वदीयं वस्तु गोविन्द
तुभ्यमेव समर्पये'
इति भावनया सभक्ति समर्पयति—

श्रीराधासर्वेश्वरशरणदेवाचार्यः



।। श्री सर्वेश्वरो जयति ।।

✻ श्रीभगवन्निम्बार्काय नमः ✻

श्रीसुदर्शनचक्रावतारश्रीमज्जगद्गुरुभगवन्निम्बार्काचार्य-
विरचित

# ✻ प्रातःस्तवराजः ✻

आद्याचार्यपादपीठाधीश्वरानन्तश्रीविभूषित—जगद्गुरु श्री
निम्बार्काचार्य श्री "श्रीजी" श्रीराधासर्वेश्वरशरण-
देवाचार्यप्रणीत—'युग्मतत्त्व प्रकाशिका'
व्याख्ययोपेतः ।



प्रकाशकः—

अखिल भारतीय श्रीनिम्बार्काचार्यपीठ, निम्बार्कतीर्थ
(सलेमाबाद) किशनगढ़ (राजस्थान)

[प्रथमावृत्ति—श्रीकृष्ण जन्माष्टमी वि. सं. २०१७, सन् १९६०]

श्रीकृष्णजन्माष्टमी विक्रमाब्द २०४९ } द्वितीयावृत्ति सन् १९९२ { न्यौछावर ४) रु०

# ॥ समर्पणम् ॥

निखिल—निगमागम—प्रतिपाद्यमान—
सौन्दर्य्य-माधुर्याद्यशेषगुण-सिन्धो !
परमप्रेमात्मकयुगल-चन्द्र !
हे श्री सर्वेश्वर प्रभो !

यथा भवदीरणयैव निर्मित; स्तवो
ऽयमात्मपरिकराद्याचार्यवर्यैस्तथैवाऽनेन
श्रीमच्चरण-चञ्चरीकेन युग्मतत्त्व-
प्रकाशिकेयं कारिता भवतैव

'सर्वं त्वदीयं न ममास्ति किञ्चित्'
अतः 'त्वदीयं वस्तु गोविन्द
तुभ्यमेव समर्पये'
इति भावनया सभक्ति समर्पयति—

श्रीराधासर्वेश्वरशरणदेवाचार्यः



श्रीसुदर्शनचक्रावतार

# श्रीमज्जगद्गुरुभगवन्निम्बार्काचार्य



# भूमिका



विश्व का कोई भी भाग ऐसा न होगा जहाँ किसी न किसी प्रकार से ईश्वर-उपासना नहीं की जाती हो। उपास्य नाम और उपासना-प्रणाली में कुछ न कुछ भेद होना स्वाभाविक है, किन्तु मूल तत्त्व और उपासना के वास्तविक उद्देश्य में विशेष अन्तर नहीं रहता।

कुछ साधक एक ज्योति का ध्यान करते हैं और कुछ लोग उसी ज्योति को निर्गुण, निराकार वस्तु मानते हैं। यद्यपि निराकार वस्तु का ध्यान और उपासना नहीं हो सकती, तथापि चर्चा की जा सकती है। इसी प्रकार का शून्यवाद समझना चाहिये। अन्तर इतना ही है—शून्यवादी उस परम तत्त्व को ज्ञान-स्वरूप भी नहीं मानते।

उपास्य तत्त्व-सम्बन्धी धारणाओं में भेद होते हुए भी वे सभी धारणायें वेद-आदि शास्त्रों द्वारा एक ही तत्त्व में केन्द्रित की जाती हैं; जैसे—पहाड़ों से चारों ओर चलने वाली नदियों की परस्पर विपरीत गति देखी जाती है, किन्तु समुद्र में मिलते ही वे सब अविरुद्ध हो जाती हैं। यद्यपि जल-रूप से वे सब अभिन्न हैं, किन्तु नद-नदी, सरोवर-पुष्करिणी, सरिता-सिन्धु आदि नाम-स्वरूपों से उनमें भी भेद है।

जिस प्रकार पशु-पक्षी, कीटपतंग आदि जङ्गम और पर्वत, वृक्ष, वनस्पति आदि स्थावर योनियों में भी लिंग (स्त्री-पुरुष)

विभेद स्पष्ट है, उसी प्रकार परब्रह्म में भी उभयत्व (युगलत्व) निश्चित है। चराचर समस्त जगत् उसी परम तत्त्व का अंश है, अतएव यह जगत् सर्वदा उसी में स्थित रहता है और वह परब्रह्म इस विश्व में ओत-प्रोत है।

जिस प्रकार वृक्ष की शाखाओं में अनेक फल दिखाई देते हैं और उन फलों के अन्दर रहने वाले प्रत्येक बीज में सूक्ष्मरूप से समग्र वृक्ष स्थित रहता है, उसी प्रकार ब्रह्म के रोम-रोम में अनेकों ब्रह्माण्ड स्थित हैं और उन ब्रह्माण्डों के एक-एक रज-कण में ब्रह्म व्याप्त है।

लोक में यह देखा जाता है कि उत्पादन-कार्य में युगल की अपेक्षा रहती है। यद्यपि वृक्षादि की उत्पत्ति में पशु-पक्षी, मानव आदि की भाँति युगलत्व का स्पष्ट भान नहीं होता, तथापि उनमें भी युगलत्व अवश्य है. अतएव विश्वकर्ता ब्रह्म को भी युगल-रूप ही मानना चाहिये। श्रुति-स्मृतियों में जहाँ-तहाँ एक-वचनान्त शब्दों से जो ब्रह्म का उल्लेख मिलता है वह युगल के अभिप्राय से ही किया गया है।

आद्याचार्य भगवान् श्रीनिम्बार्काचार्य ने भी अपने इस प्रातःस्तव में उसी युगलकिशोर का स्मरण किया है। यद्यपि यह लघुकाय एक उपासना-परक स्तव है, किन्तु इसमें दार्शनिकता भी कूट-कूट कर भरी हुई है। स्तुतियों द्वारा दार्शनिक सिद्धान्तों के प्रतिपादन करने की पद्धति अनादिकाल से चली आ रही है।

"रसो वै सः" इत्यादि श्रुतियों में ब्रह्म को रस-रूप एवं आनन्द-स्वरूप बतलाया है, वही रस-रूप ब्रह्म श्री राधासर्वेश्वर युगलकिशोर हैं। इनकी सभी क्रीड़ायें दिव्य और नित्य हैं, अतएव इन्हें विहारी विहारिणी भी कहना उचित ही है। क्योंकि—

**'राधया माधवो देवो माधवेन च राधिका"**

इत्यादि वाक्यों में श्री राधाकृष्ण का नित्य-योग वर्णित है। संस्कृत न जानने वाले भावुक भक्त भी इस स्तव के भावार्थ को जान सकें, इस उद्देश्य से आचार्यश्री ने सरल शब्दों में इसकी संस्कृत और हिन्दी भाषा में टीका की है। श्रद्धालु भक्तों का इससे बड़ा उपकार होगा।

यह स्तव विशेषतया मधुर रस के उपासकों के लिये ही उपयुक्त है और वे ही इसके अधिकारी हैं, अतः अनधिकारी एवं अपरिपक्व उपासकों को यह पुस्तक तब तक न दी जाय जब तक कि वे इस मधुर रस की उपासना के योग्य न बन जायँ। यद्यपि जहाँ तक हो सका है संशोधन कार्य में सावधानी रक्खी गई है, तथापि त्रुटियों का रह जाना स्वाभाविक है। जहाँ कहीं मुद्रण-सम्बन्धी त्रुटि प्रतीत हों विज्ञजन स्वयं सुधारने का कष्ट करें।

**अ० व्रजवल्लभशरण वेदान्ताचार्य**
**पंचतीर्थ**
**अ० भा० श्रीनिम्बार्काचार्यपीठ, निम्बार्कतीर्थ**

# किञ्चिन्निवेदनम्

विदितमेव तत्र भवतां भवतां साम्प्रदायिकानर्थकारिदु-राग्रहरहितानां किञ्चिदपि व्याकरणविद्यावतां विपश्चिदपश्चिमानां यत् "सदेव सौम्येदमग्र आसीत् तदैक्षत्" आत्मा वा इदमग्र आसीत् स ऐक्षत "तस्माद्वा विज्ञानमयादन्योन्तर आत्मा आनन्दमय सोऽकामयत" "पराऽस्य शक्तिर्विविधैव श्रूयते" "ज्ञः कालकालो गुणी सर्वविद्यः" "यः सर्वज्ञः स सर्ववित्" 'ईक्षतेर्नाशब्दम्" "गतिसामान्यात्" "श्रुतत्वाच्च" "सर्वधर्मोपपत्तेः" "सर्वोपेता चे'त्यादिश्रुतिसूत्रैः सर्वविशेष-विशिष्ट-सर्वज्ञत्वाद्यशेषगुणगणाकर एव परमात्मा सकलोपनिषदां हार्दाभिमतम। सोऽपि च "विज्ञानमयादन्योन्तर आत्मा आनन्दमयः" "रसो वै सः" "तदेतत् प्रेयः पुत्रात्" "यत्र नान्यत् पश्यति नान्यच्छृणोति" सैषाऽऽनन्दस्य मीमांसा भवति" "आनन्दं ब्रह्म" "एष ह्येवानन्दयति" "सोऽश्नुते सर्वान् कामान्" "निरञ्जनः परमं साम्यमुपैतीत्याद्यशेषश्रुतिसूत्रैर्नच निर्गुणः, नापि निराकारः, न खलु मायिकगुणः, नचाऽपि प्रत्यगात्मनः सर्वथाऽभिन्नः, अपितु परमसुन्दरः परममधुरः, परमरसमयः परमचतुरः, परममुग्धः भक्ताखिलकामनापूरकः निखिलजगद्भिन्नाभिन्न एव।

तत्राऽपि "स इममेवात्मानं द्वेधाऽपातयत्ः पतिश्च पत्नी चाभवताम्" "य एषौ दक्षिणेऽक्षन् पुरुषः" 'श्रीश्च ते लक्ष्मीश्च

पत्न्यौ" "राधानां पतये नमः" इत्यादिभिः पराशक्तिविशिष्टस्यैव तस्य पूर्णपरमात्मत्वं नचैकाकिन इत्यपि नापरोक्षमुपनिषन्मर्मज्ञानां विदुषाम् ।

एवञ्चोक्तगुणविशिष्टः शिवो वा शक्तिर्वा पञ्चाननश्चतुराननो वा चतुर्भुजो धनुर्धरोवेत्यादि मीमांसायां "कृष्णो वै हरिः परमं दैवतम्" "एको ह वै नारायण आसीन्न ब्रह्मा-नेशानः, इत्यादि श्रुतिभिस्तथा पूर्वोक्तरसमयत्वानन्दमयत्वादि ब्रह्मविशेषणैः श्रीगोपीजनवल्लभद्विभुजवंशीविभूषितपाणिमोरमुकुटधारि--पीताम्बरनटवरश्यामसुन्दरपरमचपल--श्रीवृषभानुनन्दिनीप्राणवल्लभः श्रीकृष्ण एव । रसाद्यपोषकशङ्खचक्रायुधधारिश्रीरामनृसिंहचतुर्भुजविष्णुवामनादीनां वस्तुतस्तदभिन्नत्वेऽपि रसमयत्वादिधर्माणाँ तेषु पूर्णतयाऽविकशितत्वात् परिशेषाच्छ्रीकृष्णस्यैव सर्वमूलरूपत्वं सिद्ध्यति, तथैव च "नान्यागतिः कृष्णपदारविन्दात्" इत्यादि श्रीनिम्बार्काचार्याणां, "अन्तःकरणमद्वाक्यं सावधानतया शृणु । कृष्णात्परं नास्ति तत्त्वं वस्तु दोषविवर्जितम्" इत्यादि महाप्रभुश्रीवल्लभाचार्याणाम् "आराध्यो भगवान् व्रजेन्द्रतनयः" इत्यादि प्रेमावतार—श्रीमहाप्रभु चैतन्यवर्याणां, 'कृष्णात्परं किमपि तत्त्वमहं न जाने इत्यादि मधुसूदनसरस्वतीपादानां "कृष्णो वै पृथगस्ति कोऽप्यविकृतः सच्चिन्मयो नीलिमा" इत्याद्याद्यश्रीशङ्कराचार्यवर्याणां, "कृष्णस्तु भगवान् स्वयम्" "कृष्ण एव हि लोकानां भावनो मोहनस्तथा" इत्यादि भगवद्वेदव्यासमहाप्रभुवर्याणां वचनानां सार्थक्यात् ।

पराशक्त्यभिधानायाः परमाह्लादिन्याः सर्वश्रीमूलरूपायाः श्रीराधायास्तत्प्राणवल्लभस्य श्रीकृष्णस्य च नित्यदाम्पत्यं नित्यै-

कात्मत्वमेकप्राणत्वं च सकलोपनिषदादौ पञ्चरात्रसंहितासु च सुष्पस्टमेव । "रसो वै सः" इत्यादि श्रुतिभिरेनयोर्मधुरोपासना चापि यद्यपि नित्यसिद्धा, तथापि धरातलावतीर्णेन तत्र भवता भगवता श्रीनिम्बार्काचार्यवर्य्येणैव कलौ सर्वप्रथमं प्रचारितेत्यपि नापरोक्षं सहृदयसमीक्षकानाम् ।

अस्मिन् विषये लिखन्तु लेखका आधुनिका यथेच्छं, प्रचारयन्तु वा विपरीतं केचन परोत्कर्षासहिष्णवः सम्प्रदायप्रचारैकलक्ष्याः । लेखेऽस्ति समेषां स्वातन्त्र्यं, परं वस्तुस्थितिं को नामापलापितुं प्रभवेत् । 'स्वभावतोऽपास्तसमस्तदोषम्' अङ्गे तु वामे वृषभानुजां मुदा इत्युभावेवश्लोकावलमस्ति श्रीनिम्बार्कसम्प्रदायस्य रसोपासनायाः प्राचीनत्वे । श्लोकयोरेनयोराधुनिकत्वं कोऽनुन्मत्तः प्रलपेत् । श्रीनिवासभाष्यादौ, श्रीदेवाचार्यकृतसेतुकादौ सर्वत्रैनयोः समुद्धरणात्, पुरुषोत्तमाचार्यकृतविस्तृतव्याख्यानसद्भावाच्च । चतुर्दशशताब्द्यां समाविर्भूतानां श्रीनिम्बार्काचार्यपदमलकुर्वतां तत्र भवतां श्रीश्रीभट्टपादानां 'वसो मेरे नयननि में दोऊ चन्द' 'वृन्दावन इक सुन्दर जोरी' इत्यादि भाषापद्यैरपि श्रीराधाकृष्णयुगलमधुरोपासनायाः प्रतिपादनाच्च । तस्मात्सिद्धं श्रीराधामाधव—युगलोपासनायाः प्राचीनत्वमेतत्सम्प्रदायस्यैव ।

तेषामेवाचार्यवर्याणां श्रीसुदर्शनावतारमहाप्रभुपादाना मनन्तश्रीविभूषितानां श्रीनिम्बार्काचार्यवर्याणां सरसा प्रातःस्तवाख्याकृतिरियमिति साम्प्रदायिकप्राचीनाधुनिकग्रन्थोद्धरणात् साम्प्रदायिकवयोवृद्धमहात्मनां वचनाच्च प्रसिद्धा ।

अस्य च प्रातःस्तवस्य संस्कृते भाषायां वा न काऽपिव्याख्या समुपलब्धेति विभाव्यास्माकं वर्तमान—श्रीनिम्बार्काचार्यपदमलंकुर्वद्भिरनन्तश्रीविभूषितचरणैस्तत्रभवद्भिः प्रातःस्मरणीयैः श्रीराधासर्वेश्वरशरणदेवाचार्यवर्यैः सरलया शरण्या या व्याख्या कृताऽस्ति. सा च तेषां सम्प्रदायस्य कृते महत्त्वपूर्णं देयमस्ति ।

उपनिषद् – ब्रह्मसूत्रगीताख्यप्रस्थानत्रयीप्रमाणैः पुराण पञ्चरात्रप्रमाणैश्च पदे पदे समुपगुम्फितेयं प्रातःस्तवव्याख्या वस्तुत आचार्यवर्याणामनुरूपैव । व्याख्यायाश्चास्या महती विशेषतेवमस्ति यदाचार्यवर्याणां प्रातःस्तवेऽस्मिन् कृत्स्नमपि व्याख्यानं पूर्वाचार्यसिद्धान्तानुगतं सत् प्रस्थानत्रयीप्रमाणपूर्वकं वरीवर्तीति नात्र मनागपि सन्देहलेशावसरः ।

आशासे कृतिरियं वर्तमानाचार्यवर्याणां प्राथमिकी सन्त्यपि रागादिरोगरहितानां भगवत्प्रेमैकलिप्सूनां विदुषां चिराय मनसां प्रमोदमावहेत्, प्रदर्शयेच्च कतिपयानां वर्तमानसाम्प्रदायिकसाधकानां दोषवशात् पूर्वाचार्यसिद्धान्तप्रतीपपथमवलम्बितानां साम्प्रदायिकसत्पथमिति ।

भक्तानुकिंकरस्य—

**झोपाख्य-वैद्यनाथस्य**

व्या० वे० आ० न्या० शा० सा० र०



# * सुमनाञ्जलि *



सैकड़ों जन्मों के शुभानुष्ठानों से विशुद्धान्त:करण वाले मनुष्य के हृदय में भगवत्कृपैकलभ्य-रागानुगाभक्ति का संचार होता है। रागानुगाभक्ति साधन नहीं अपितु साध्य है और इसका विषयालम्बन स्वयं आत्मस्वरूप रसिकेश्वर श्रीश्यामसुन्दर हैं। क्योंकि उनकी सुन्दरता में लीलाविलास का बांकपन है। वही लोकललाम हैं। वे नेत्र और अधर से ही नहीं भौंहों से भी हँसते हैं। उनकी चञ्चलचटुल और मञ्जुल मृदुल मूर्त्ति उपासकों को गलबहियाँ देकर वरबस समेट लेती है।

इन रस रहस्यों का समुद्घाटन करनेवाले महानुभावों में रसिकशिरोमणि अनन्त श्रीविभूषित जगद्गुरु श्रीनिम्बार्काचार्य की विशेष ख्याति है। उन्होंने स्वानुभूत अनुराग सागर को इस 'प्रात:-स्मरण-स्तोत्र' में बीज रूप से समाविष्ट कर दिया है। यह मूलरूप में उपलब्ध था, किन्तु इसकी कोई टीका उपलब्ध नहीं थी।

परम श्रद्धेय ! अनन्त श्रीविभूषित जगद्गुरु श्रीनिम्बार्काचार्य श्री 'श्रीजी' महाराज ने सांसारिक जीवों पर असीम कृपा करते हुए एक बहुत बड़े अभाव की पूर्ति की है। इस व्याख्या से स्तोत्र का भावज्ञान तो होता ही है, साथ ही सम्प्रदाय के गूढ़ रस रहस्य का भी स्थान-स्थान पर दर्शन होता है।

पूज्य श्री आचार्य चरणों ने अपनी सुस्पृष्ट ललित भाषा में उपासना का क्रम प्रदर्शित करके ग्रन्थ को विशेष उपयोगी बनाने की कृपा की है। हम तो पूज्य श्री चरणों में यही प्रार्थना करते हैं कि इसी प्रकार और रस-ग्रन्थों को भी अपनी ओजस्विनी लेखनी द्वारा विभूषितकर सांसारिक जीवों के कल्याण की कृपा करेंगे।

प्रेमिणां वशंवद:—

पं० सुरति झा, व्या० साहित्याचार्य: काव्य-पुराणतीर्थश्च

।। श्रीसर्वेश्वरो जयति ।।

★ श्रीभगवन्निम्बार्काचार्याय नमः ★

# ❁ वक्तव्यम् ❁



को न वेत्ति सर्वनियन्तृत्व-सर्वात्मत्व-सर्वव्यापकत्व-सर्वाधारत्व-सर्वशक्तिमत्त्व-सर्वज्ञत्व-स्वतंत्रसत्त्वादिधर्माश्रयस्य, निरतिशय-सौन्दर्यमाधुर्यकारुण्यलावण्यादिविशिष्टगुणसमूहस्य दिव्यमङ्गल-विग्रहस्य भगवतः परमपुरुषोत्तमस्य श्रीकृष्णस्य श्रीमद्धंस-रूपेणावतीर्णस्य परमशिष्याणां श्रीभगवदवताराणां ब्रह्मणो-मानसपुत्राणां, अनादिनिवृत्तिपथप्रदर्शकानां ब्रह्मविद्योपदेष्टॄणां स्वाभाविकद्वैताद्वैतप्रवर्तकानां चतुःसनादीनां महर्षीणां नाम ।

तेषामेव शिष्यो वीणापाणिः पूज्यपादो भगवान् देवर्षि-नारदः, एतत्तु छान्दोग्योपनिषदि सप्तमाध्याये श्रीसनत्कुमार–सम्वादे सुस्पष्टम्, एभ्य एव परमतत्त्वं समुपलभ्य श्रीसुदर्शनचक्रावतारः करुणावरुणालयो जगद्गुरुर्भगवान्-श्रीनिम्बार्काचार्यवर्यो विविधविचित्ररचनारूपे नानाविधक्लेशाकुले धरातले श्रुतिस्मृति-ब्रह्मसूत्रप्रतिपाद्यं स्वाभाविक- द्वैताद्वैतसिद्धान्तं संस्थापयामास ।

**नारायणमुखाम्भोजान्मन्त्रस्त्वष्टादशाक्षरः ।**
**आविर्भूतः कुमारैस्तु गृहीत्वा नारदाय वै ।।**
**उपदिष्टः स्वशिष्याय निम्बार्काय च तेन तु ।**
**एवं परम्पराप्राप्तो मन्त्रस्त्वष्टादशाक्षर. ।।**

इत्यादि श्रीविष्णुयामलवचनवृन्देभ्योऽपि गुरुशिष्यत्वं प्रसिद्ध-मेव । आद्याचार्यैभगवच्छ्रीनिम्बार्काचार्यवर्यैर्लोककल्याणायोप-निषदां सम्यगर्थाववोधनाय चानेके ग्रन्था निवद्धाः तद्यथा—"वेदान्त- पारिजातसौरभाख्यं ब्रह्मसूत्राणां सूक्ष्मं भाष्यम्" 'दशश्लोकी वेदान्तकामधेनुः" "मन्त्ररहस्यषोडशी" "प्रपन्नकल्प-वल्ली" "श्रीकृष्णप्रातः स्मरणस्तोत्रम्" इत्यादयो ग्रन्था उप-लभ्यमानाः सन्ति । "प्रपत्तिचिन्तामणिः" "सदाचारप्रकाशः" "गीतावाक्यार्थ." एतद्ग्रन्थत्रयमप्यासीत् इति श्रीपुरुषोत्तमाचार्य-चरणानां श्रीसुन्दरभट्टपादानां वाक्यैरवगम्यते । परमेते ग्रन्थाः साम्प्रतं तु नोपलभ्यन्ते ।

भगवच्छ्रीनिम्वार्काचार्यचरणैः "वेदान्त पारिजातसौरभ"—"दशश्लोकी-वेदान्तकामधेनु" भ्यां ग्रन्थाभ्यां स्वाभाविकभेदा-भेदसिद्धान्तः प्रतिपादितः । "मन्त्ररहस्यषोडशी" "प्रपन्नकल्प-वल्लीति" ग्रन्थाभ्यां क्रमशः श्रीमन्त्रराजस्य श्रीशरणागतिमन्त्रस्य च विधिमहिमानौ प्रदर्शितौ । अथ च श्रीप्रातः स्तवे नित्यदिव्या-प्राकृतधाम्नः श्रीवृन्दावनस्य स्वरूपं तथा श्रीयुग्मरूपस्य भगवतः स्वरूपं नित्यनिकुञ्जरसतत्त्वञ्च दर्शितानि । बहूनां सम्प्रदायरहस्य-विशेषज्ञानां वर्तमानविपश्चितामेवंविधा विपुला मान्यतैवैतस्या-ऽद्याचार्यकृतित्वे प्रामाण्यमावहति. "नह्यमूला जनश्रुति" रितिन्यायात् । सम्प्रदायसमासादितप्रख्यातिभिः सुधीभिः शुक-शास्त्रटीकाकृद्भिः शुकसुधीभिरपि स्वसंगृहीतस्वधर्मामृतसिन्धौ वहुमानपुरस्सरतया गुरुप्रपत्तिप्रस्तावे परिगृहीतत्वाञ्च । नास्या-द्याचार्यकृतित्वे प्रेक्षावतां मनागपि विचिकित्सावकाशः ।

अयं हि संस्तवनीयः "प्रातःस्तवः" अतीवमनोहरस्तथा चानिर्वचनीयदिव्यरससमन्वितो वर्तते। अस्मिश्च स्तवे श्रीमदाचार्यचरणैः परमतत्त्वं निगूढ़भावसमन्वितं प्रदर्शितम्। यथा च श्रुतिस्मृतयः प्रतिपादयन्ति। एतत्स्तवस्याद्यावधिपर्यन्तं न काऽपि टीका लोचनगोचरायिता, एवञ्चास्य भावगम्भीरतां परममनोरमतां संवीक्ष्यास्माकं हृदि सहसैव मृदुमितपदा टीकारचनाऽऽकांक्षा समजनि। यद्यप्येतस्य विस्तृतविवेचनस्य महती समीहाऽऽसीदस्माकं परं व्यवधानबाहुल्येन नो पारयाम यथेच्छं व्याख्यातुमित्येतस्यगहान् खेदः। तथापि निजानन्दाय वोधाय च श्रीयुग्मरूपस्य भगवतोऽनिर्वचनीयदिव्यनित्यनिकुञ्जरसरसिकानां परमभावुकानां भगद्भक्तानाञ्च परि तुष्टये एतत्स्तवस्यातिसंक्षिप्ततमा- "युग्मतत्त्वप्रकाशिका" ऽऽख्या टीका हिन्दी भाषायां सरलार्थश्च प्रणायिषातम्।

**श्री राधासर्वेश्वरशरणदेवाचार्यः**



# * श्रीनिम्बार्क-चतुश्लोकी *

[ १ ]

हरेरायुधाचार्यनिम्बार्कदेवं
व्रजे धाम्नि सर्वेश्वरार्चानिमग्नम् ।
सदा भक्तवृन्दैः समाराध्यमानं
भजे भानुकोटिप्रकाशं मुनीन्द्रम् ।।

[ २ ]

असीमप्रभं नौमि निम्बार्कदेवं
मुहू राधिकाकृष्णयुग्माङ्घ्रिकञ्जे ।
अशेषाऽनुरक्तं पराभक्तिशीलं
महाभावसिन्धौ मुदा गाहमानम् ।।

[ ३ ]

स्ववेदान्तसिद्धान्त-संस्थापकं श्री-
परब्रह्मरूपाभिव्यक्ति- प्रदाने ।
श्रुतिब्रह्मसूत्रादिसद्भाष्यकारं
भजेऽहं कृपाधाम निम्बार्कदेवम् ।।

[ ४ ]

मुकुन्दाङ्घ्रिभक्तिप्रचारप्रसिद्धं
श्रुतिव्याहृताऽऽचारमाख्यापयन्तम् ।
असत्प्रोक्ततर्काऽपहारप्रवीणं
समाराधयामीह निम्बार्कदेवम् ।।

श्रीनिम्बार्क-पदाम्बुजभक्तिकामः-

**श्रीराधासर्वेश्वरशरणदेवाचार्यः**

# रसिकाराध्य युगलकिशोर श्रीश्यामाश्याम



श्यामाश्यामौ सदा वन्दे वृन्दारण्य सुशोभितौ ।
सहचरीसमाराध्यौ भवबीजौ मनोहरौ ॥

॥ श्रीसर्वेश्वरो जयति ॥

श्रीभगवन्निम्बार्काय नमः

श्रीसुदर्शनचक्रावतारभगवच्छ्रीनिम्बार्काचार्य— विरचित—

प्रातः स्तवाख्यस्तोत्रस्य

# युगमतत्त्व-प्रकाशिका

राधाकृष्णौ सदा सेव्यौ भक्तरक्षणतत्परौ।
वृन्दावन-निकुञ्जस्थौ व्रजबालाभिरावृतौ ॥१॥

निम्बादित्यमहं वन्दे करुणावरुणालयम्।
चक्रावतारमाचार्यं रङ्गदेवी--स्वरूपकम् ।२॥

श्रीहरिव्यासपादानां शिष्यं श्रेष्ठतमं भजे।
देवं परशुरामाख्यमाचार्यं सिद्धिसागरम् ॥३॥

युग्माङ्घ्रिध्यानसंलग्नं श्रीनिम्बार्कसमाकृतिम्।
श्रीबालकृष्णदेवाख्यमाचार्यं गुरुमाश्रये ॥४॥

श्रीनिम्बार्ककृतस्यास्य प्रातःस्तोत्रस्य सादरम्।
निजानन्दाय बोधाय वैष्णवानाञ्च तुष्टये ॥५॥

सम्प्रदायानुसारेण सम्यग्बोधप्रदायिका।
टीका विरच्यते भक्त्या 'युग्मतत्त्वप्रकाशिका' ॥६॥

इह खलु ब्रह्मरुद्रेन्द्रादिकिरीटकोटीडितपादपीठ-निखिलजगदभिन्ननिमित्तोपादानकारण--क्षराक्षरातीत--निरतिशय- सौन्दर्य्यमाधुर्य्यलावण्यसौकुमार्य्यसौगन्ध्यसौशील्यमार्दवाद्यनन्तकल्या-

णगुणाश्रय – सकलदोषगन्धाऽघ्रातमाहात्म्य--कालकर्मनियन्तृ जगज्जन्मादिहेतु--वेदान्तैकवेद्य – दिव्यमङ्गलविग्रह परब्रह्मपुरुषोत्तमादिशब्दाभिधेयश्रीकृष्णस्यानुज्ञयाऽवनितलाऽवतीर्णेन तदचिन्त्यशक्त्युपबृंहितानन्तशक्तिमता जगदुद्दिधार्षुणा करुणावरुणालयेन, आचार्यमूर्द्धन्येन—श्रीसुदर्शनावतारेण भगवता श्रीनिम्बार्काचार्येण निजनिर्मितवेदान्तकामधेनौ दशश्लोक्यां श्लोकद्वयेन प्रतिपादितश्रीराधाकृष्णाभिधेयपरब्रह्मस्वरूपस्य सम्यक् परिज्ञानार्थं ध्येयोज्ञेयोगेयः प्रातःस्तवोऽयं निरमायि। तत्रैवाधिकारिविषयसम्बन्ध---प्रयोजनानीत्यनुबन्धचतुष्टयमपेक्षितम्। तत्र परमभावुको भगवद्भक्तः श्रीवृन्दावनरसरसिक एवाऽधिकारी, स्वभावतोऽपास्तसमस्तदोषानन्तकल्याणगुणगणनिलयौ श्रीराधासर्वेश्वरौ विषयः, वाच्यवाचकभावः सम्बन्धः, भगवद्भावापत्तिरेव प्रयोजनमित्यवधेयम्। अथ च तस्यैव प्रातःस्तवस्य श्रीराधासर्वेश्वरप्रभोरनुकम्पया मया युग्मतत्त्व—प्रकाशिकाऽऽख्या मितव्याख्या यथामति वितन्यते। तत्र पूर्वं श्रीवृन्दावनधाम्नः स्वरूपं निरूपयति—

**प्रातः स्मरामि युगकेलिरसाभिषिक्तं,**
**वृन्दावनं सुरमणीयमुदारवृक्षम्।**
**सौरीप्रवाहवृतमात्मगुणप्रकाशं,**
**युग्माङ्घ्रिरेणुकणिकाञ्चितसर्वसत्त्वम् ॥१॥**

प्रातःस्मरामीति·····॥**युगलकेलिरसाभिषिक्तमिति**—सर्वनियन्त्रोर्भगवतोः, श्रीराधाकृष्णयोर्दिव्याप्राकृतानिर्वचनीय केलिरसेन, अभिषिक्तम्–सम्यक् प्रकारेणाप्लावितम्। अथ चात्र कीदृशः केलिरसो

लौकिकऽलौकिको वा नाद्यः अप्राकृतरूपत्वात् श्रुतिस्मृतिविरुद्धत्वाच्च । "रसो वै सः" "सर्वकामः सर्वगन्धः सर्वरसः "सैषा आनन्दस्य मीमांसा भवति" 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाति" इत्यादिश्रुतिभिः, "आनन्दमयोऽभ्यासात्" इत्याद्यानन्दमयाधिकरणेन च तयोर्दिव्यरसरूपत्वेन स्पष्टवर्णनात्, श्रीमहावाण्यादिरसग्रन्थकर्तृभिर्नित्यनिकुञ्जरसरसिकेश्वरैः श्रीमदाचार्यपादैः श्रीहरिव्यासदेवाचार्यचरणैरपि महावाण्यां "रसरूपौ रसायनौ" इत्यादि वाक्येन तयोः रसरूपत्वेन रसिकरूपत्वेन च वर्णनात् । तथा चोभयोः रसरूपत्वे तयोर्विलासात्मककेलेरपि दिव्यत्वस्यैव सम्भवात । इयमस्ति विशेषता सर्वसम्प्रदायविलक्षणा श्रीनिम्बार्कसम्प्रदायस्यैव । कैश्चिद्भगवतो रसरूपत्वमेव कैश्चिच्च रसिकरूपत्वमेव तस्याङ्गीक्रियते । सम्प्रदाये चाऽस्मिन् भगवतो रसरसिकोभयरूपत्वेनैव सर्वत्र वर्णनात, तथैव च निखिलानां भागवतादि—सच्छास्त्राणां संगतेः । "तस्माद् विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः" "रसो वै सः" "इतररागविस्मारणं नृणाम्" "कुर्वन्ति हि त्वयि रतिम्" "प्रेष्ठो भवांस्तनुभृताम्" "वितर वीर नस्तेऽधराऽमृतम्" इत्यादि श्रुतिपुराणवाक्यैस्तस्य रसरसिकोभयरूपत्वेनैव वर्णनात् । तथैव भगवतः पूर्णत्वमपि संगच्छते ।

अत्र साहित्यादिशास्त्रप्रतिपादितशृङ्गारवीरकरुणादिरसेषु शृङ्गारस्यैव सर्वतोमुख्यतया वर्णनात्, तस्य च "शृङ्गारो विष्णुदैवतः" श्यामो भवति शृङ्गारः" इत्यादिप्रमाणेन परमविष्णु—श्रीकृष्णाधिष्ठातृकत्वेन "रसो वै सः" इत्यादि

श्रुतिप्रतिपाद्यो विषयो भगवान् श्रीकृष्ण एव। तृतीयश्लोकेऽपि केलिरसचिह्नादिना केलिरसवर्णनात् पौनरुक्त्यादि नाशङ्कनीयम्। तत्र नित्यनिकुञ्जस्थान्तरङ्गयुगलविहारस्यैव केलिपदार्थत्वात्। "चिन्हसखीदृगौघ" मित्याद्युत्तरपदेन तथैव सम्भवात्। अत्र त्वनन्तानां नित्यसिद्धानां साधनसिद्धानाञ्च श्रियोऽनुरूपाणां श्रीरङ्गदेवीललिताविशाखाहितूहरिप्रियाऽऽदीनां प्राणप्रियसखीनां समक्षे विहितानां कन्दुकक्रीड़ा- तरणितनयातीरविहरणनानाविधलताद्रुमकुसुमचयनादि---बहिरङ्गलीलानामेव, केलिपदेन ग्रहणम्। श्रीयुग्मरूपधामिश्रीवृन्दावनधामेति विशेष्यभेदेनाऽपि पौनरुक्त्यासम्भवाच्च। **सुरमणीयमिति**- सम्यग् रमणीयं परमसुन्दरम्, अर्थाच्छ्रीराधाकृष्णारुणचरणारविन्दतलविलक्षणयवाङ्कुरादिना, दिव्याप्राकृतलतागुल्मादिना च शोभितत्वादतिमनोहरमित्यर्थः। **उदारवृक्षमिति**- उदाराः कल्पतरोरपि श्रेष्ठा भक्तभावनाऽऽपूरका वृक्षाः यत्र तम्। श्रीधाम्नः सकलवस्तुनः चिदानन्दमयत्वाद्वृक्षाणामपि तत्रत्यानां परमोदारतेति भावः। **सौरीप्रवाहवृतमिति**- सूरस्य (सूर्यस्य) अपत्यं स्त्री सौरी यमुना तस्या गम्भीरप्रवाहस्तेन वृतं समन्वितं वलयाऽऽकाररूपेणाऽऽवृतम्। **आत्मगुणप्रकाशमिति**- आत्मनः परमात्मनः श्रीनित्यनिकुञ्जविहारिणः सौन्दर्य्यमाधुर्य्यलावण्याद्यनन्तकल्याणगुणानां प्रकाशो यत्र तत्, अथवा निजदिव्यानिर्वचनीयगुणप्रकाशो यत्र तत्। **युग्माङ्घ्रिरेणुकणिकाञ्चितसर्वसत्त्वमिति**-युग्मयोः श्रीराधामाधवयोः अङ्घ्रयः, युग्माङ्घ्रयस्तेषां रेणवः युग्माङ्घ्रिरेणवस्तेषां कणिकास्ताभिरञ्चितानि सर्वाणि सत्त्वानि यस्मिन् तत्। श्रीराधाकृष्णपदपङ्कजरजोरेणुकणपूतान्तः-

करणसकलप्राणिमात्रम् । तथा च यच्चरणरजोरेणुं ब्रह्मरुद्रेन्द्रादयो देवा अप्यनारतं वाञ्छन्ति । यथोक्तं श्रीमद्भागवते ब्रह्मणा—

**तद् भूरिभाग्यमिह जन्म किमप्यटव्यां-**
**यद् गोकुलेऽपिकतमाङ्घ्रिरजोभिषेकम् ।**
**यज्जीवितं तु निखिलं भगवान्मुकुन्द-**
**स्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव ।।**

तथैवोक्तं भगवता श्रीशुकेनाऽपि—

**यत्पादपङ्कजपरागनिषेवतृप्ता**
**योगप्रभावविधुताऽखिलकर्मबन्धाः ।**
**स्वैरं चरन्ति मुनयोऽपि न नह्यमाना-**
**स्तस्येच्छयाऽऽत्तवपुषः कुत एव बन्धः ।।**

इत्यादिबहुविधवचनादुक्तकथनं सुस्पष्टमेव, किंपुनर्वक्तव्यमन्येषां प्राणिनाम् । **वृन्दावनमिति**– वृन्दा तुलसी तस्या वनं काननं वृन्दावनं, किंवा वृन्दा भक्तिस्तया अवनं रक्षणं यत्र तद् वृन्दावनम्, अर्थाद्यत्रत्या जनाः श्रीकृष्णभक्त्यैव जीवन्तीतिभावः तथाचोक्तं बृहद्ब्रह्मसंहितायाम् –

**गुणातीतं महद्धाम प्रेमभक्तिस्वरूपकम् ।**
**वृन्दया चावनं यस्मात्तस्माद् वृन्दावनं स्मृतम् ।।**

अर्थात्—सच्चिदानन्दघनमप्राकृतं परब्रह्मणो भगवतः श्रीकृष्णस्य निवासस्थानं श्रीमद्वृन्दावनं धाम इति स्फुटम् । अथवा वृन्दा भक्तिस्तस्या अवनं पालनं यत्र तत् "धन्यं वृन्दावनं तेन भक्तिर्नृत्यति यत्र च" इत्यादिना पद्मपुराणे भागवत-

माहात्म्ये भक्तेः पालनस्य विशेषतया तत्रैव प्रतिपादनात्। तत्राप्राकृतं नाम त्रिगुणप्रकृतिकालाऽत्यन्तभिन्नं प्रकाशात्मकमनावरकस्वभावमचेतनद्रव्यम्। तदेव च नित्यविभूतिपरमात्मलोकपरमव्योमविष्णुपदपरमपदादिशब्दाभिधेयं दिव्यं भगवद्धाम "आदित्यवर्णं तमसः परस्तात्" "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" न स पुनरावर्तते" "अनावृत्तिः शब्दात्"

**योगसिद्धमहात्मानस्तमोमोहविवर्जिताः ।**
**तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत ।।**
**स्थानमेतन्महाराज ! ध्रुवमक्षयमव्ययम् ।**
**ईश्वरस्य सदा ह्येतत्प्रमाणञ्च युधिष्ठिर! ।।**

(महाभारते)

**आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ।।**

(श्रीमद्भगवद्गीतायाम्)

इत्यादिश्रुतिसूत्रस्मृतिभ्यः सर्वोत्कृष्टत्वेन प्रदर्शितम्। अपिचाऽस्माकं पूर्वाचार्यचरणैरपि "सविशेषनिर्विशेषश्रीकृष्णस्तवराजा"ख्ये स्तोत्रे श्रीधाम्नः श्रेष्ठत्वमुपपादितम्। यथा—

**पारशून्यपरधाम तेऽद्भुतं चिद्घनं जयति लोकमूर्द्धनि ।**
**व्यापकं च परिखा सरिद्वराऽचिन्त्यशक्तिनवमङ्गलध्वनि ।।**

इत्थञ्च भगवता श्रीनिम्बार्काचार्यचरणेन प्रातःस्तवस्य प्रथमश्लोकेन श्रीवृन्दावनधाम्नः परमोत्कृष्टत्वमभिव्यञ्जितम्। एवञ्च श्रीधाम्नःपरमोत्कृष्टत्वे परमश्रेष्ठत्वे चानेकानि शास्त्रान्तराणि प्रमाणानि वक्ष्यन्ते—

तद्यथा गीतायाम्—

न तद्भासयते सूर्यो न शशाङ्को न पावकः।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥

"हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्" सत्यं ज्ञानमनन्तं ब्रह्म" "यो वेद निहितं गुहायां परमे व्योमन्' "सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता"

तद्विष्णोः परमं धाम शाश्वतं शिवमच्युतम्।
नहि वर्णयितुं शक्यं कल्पकोटिशतैरपि ॥

हरेः पदं वर्णयितुं न शक्यं मया च धात्रा च मुनीन्द्रवर्य्यैः।
यस्मिन्पदे अच्युत ईश्वरोऽयं स वेद चेदं यदि वा न वेद ॥

इत्यादि श्रुतिपुराणवाक्यैरपि परमव्योमाख्यभगवद्धाम्नः सर्वातिशायित्ववर्णनात्। एवमेव पद्मपुराणे पातालखण्डे वृन्दावनमाहात्म्येऽपि श्रीधाम्नो वैकुण्ठादिसकलदिव्यधामापेक्षया परमश्रेष्ठत्वमभिहितम्।

तथाहि—

पार्वत्युवाच

अनन्तकोटिब्रह्माण्डे तद्बाह्याभ्यन्तरस्थिते।
विष्णोः स्थानं परं तेषां प्रधानं परमुत्तमम् ॥
यत्परं नास्ति कृष्णस्य परं स्थानमनोरमम्।
तत्सर्वं श्रोतुमिच्छामि कथयस्व महाप्रभो ! ॥

महेश्वर उवाच

गुह्याद् गुह्यतरं पुण्यं परमानन्दकारकम्।
अत्यद्भुतं रहः स्थानं रहस्यं परमं पदम् ॥

दुर्लभानाञ्च परमं दुर्लभं मोहनं परम् ।
सर्वशक्तिमयं देवि! सर्वस्थानेषु गोपितम् ।।

सात्वतां स्थानमूर्द्धन्यं विष्णोरत्यन्तदुर्लभम् ।
नित्य वृन्दावन नाम ब्रह्माण्डोपरि संस्थितम् ।।

पूर्ण ब्रह्मसुखैश्वर्य्यं नित्यमानन्दमव्ययम् ।
वैकुण्ठादि तदंशांशं स्वयं वृन्दावनं भुवि ।।

गोलोकैश्वर्यं च यत्किञ्चिद् गोकुले तत्प्रतिष्ठितम् ।
वैकुण्ठवैभवं यद्वै द्वारकायां प्रतिष्ठितम् ।।

यद् ब्रह्मपरमैश्वर्य्यं नित्यं वृन्दावनाश्रयम् ।
कृष्णधाम परं तेषां वनमध्ये विशेषतः ।।

अत्र च वैकुण्ठादीनां भगवद्दिव्यधाम्नां गोलोकादुपरिस्थित-नित्यरासरसोत्सव--पूर्णप्रेमरसात्मक--गोपगोभिरलङ्कृत परम-रसप्रद—श्रीराधासर्वेश्वर—नित्यनिकेतन - -श्रीवृन्दावनधामांशत्वं प्रपञ्चितम् । एवंविधं वृन्दावनं **प्रातः स्मरामि** – अर्थात् प्रभाते-ब्राह्ममुहूर्त्ते स्मरामि स्मरणं करोमीति यावत् ।

उपर्युक्ते नैतावता ग्रन्थेन नित्यनिकुञ्जोपासकैः सखीभावभावितैः पूर्वं प्रियाप्रियतमयोः श्रीराधामाधवयोर्लीलाविलासस्थानं परमप्रियं श्रीवृन्दावनधामैवस्मरणीयं, तदनन्तरञ्च प्रियाप्रियतमाविति स्मरणक्रमो दर्शित आद्याचार्यचरणैः। श्रीधाम्नो-विशेषवर्णनं गौतमीयतन्त्रे, पद्मपुराणे पातालखण्डे वृन्दावनमाहात्म्ये, क्रमदीपिकायाञ्च श्रीवृन्दावनरसरसिकैरवलोकनीयम् ।।१।।

**हिन्दी-अर्थ—भगवान् श्रीराधाकृष्ण के दिव्य विहार रस से अभिषिक्त तथा श्रीयमुनाजी के प्रवाह से समन्वित अपने दिव्य**

**अनिर्वचनीय गुण समूहों के प्रकाशक श्रीप्रियाप्रियतमजू के चरणारविन्द के रजरेणु के कण से पवित्र हैं जहाँ के समस्त प्राणी एवं कल्पवृक्ष स्वरूप परम सुन्दर रमणीय श्रीवृन्दावन का मैं प्रातःकाल स्मरण करता हूँ ॥१॥**

इतः प्राक् प्रथमश्लोकेन नित्यधाम्नः श्रीवृन्दावनस्य सच्चिदानन्दस्वरूपत्वमप्राकृतत्वञ्चेत्यादिकं वैलक्षण्यं निर्दिष्टम् । अथ चाग्रे द्वितीयश्लोकेन धामिनः सर्वान्तर्यामिणः सर्वनियन्तुः, सर्वेश्वरस्य नन्दात्मजस्य श्रीश्यामसुन्दरस्य सौन्दर्यमाधुर्यलावण्यादिविशिष्टं स्वरूपं व्याचष्टे –

**प्रातःस्मरामि दधिघोषविनीतनिद्रं**
**निद्रावसान–रमणीयमुखानुरागम् ।**
**उन्निद्र–पद्मनयनं नवनीरदाभं**
**हृद्यानवद्यललनाञ्चितवामभागम् ॥२॥**

प्रातः स्मरामीति–**दधिघोषविनीतनिद्रमिति**–दध्नः घोषो दधिघोषस्तेन विनीता निद्रा यस्यासौ तं तथोक्तमिति व्यधिकरणबहुव्रीहिः, एतदुक्तं भवति–प्रभातवेलायां व्रजाङ्गनाभिर्दधिमन्थनेनाऽविर्भूतो यो घोषोऽर्थात्, शब्दस्तस्य श्रवणेन त्यक्तनिद्रम् । **निद्रावसान–रमणीयमुखानुरागमिति**–निद्रायाः, अवसानं निद्रावसानं तस्मिन् रमणीयः मुखस्य अनुरागः यस्यासौ तं पूर्वोक्तम् । अर्थात् निद्राया अवसाने तद्भङ्गावसरे भगवतोऽत्यन्तरमणीयाप्याकृतिस्ततोऽपि रमणीयतामावहतीत्यर्थः । **उन्निद्रपद्मनयनमिति**–उन्निद्रञ्च तत् पद्मं उन्निद्रपद्मं

तत्सदृशे नयने यस्यासौ तम् उन्निद्रपद्मनयनम् - विकसितकमल-नेत्रम्। **नवनीरदाभमिति** – नवश्चासौ नीरदः नवनीरदो मेघः तत्सदृशी आभा कान्तिर्यस्यासौ तं नवनीरदाभं – नूतनजलधर-रुचिम्। **हृद्यानवद्यललनाञ्चितवामभागमिति** - हृद्या परम-मनोज्ञा अनवद्या स्वभावतोऽपास्तसमस्तदोषा, ललना पर-माह्लादिनी रासेश्वरी श्रीराधा तया अञ्चितं पूजितं शोभितं वामाङ्गं यस्य तं, श्रीकृष्णम्। तथाहि "राधया माधवो देवो माधवेन च राधिका विराजते" इत्यादि ऋक्परिशिष्टश्रुतौ, "अङ्गे तु वामे वृषभानुजां मुदा" इति वेदान्त कामधेनौ दश-श्लोक्यामपि श्रीमदाद्याचार्यचरणैरपि प्रतिपादितत्वात्। इत्थ-ञ्चोक्तप्रकारकं—अखिलब्रह्माण्डनायकं रसमानन्दकन्दनन्दनन्दन श्रीश्यामसुन्दरम् **प्रातः स्मरामि** - प्रातः उषसि स्मरणं करोमीति संक्षिप्तो भावः ।।२।।

**हिन्दी– अर्थ—प्रातःकाल व्रजवनिताओं द्वारा किये गये दधिमन्थन के गम्भीर-घोष (शब्द) के श्रवण से जिनकी निद्रा खुल चुकी है, निद्रा के खुलने पर जिनके मुखारविन्द की शोभा अत्यन्त रमणीय दिखाई दे रही है. उन विकसित कमल के सदृश नेत्र और नवीन मेघ के समान कान्ति को धारण करने वाले तथा निरन्तर सौन्दर्य-माधुर्य्य लावण्यादि विविधगुण विशिष्ट परमाह्लादिनी रासेश्वरी श्रीराधिकाजी के द्वारा पूजित अर्थात् शोभायमान वामाङ्ग वाले भगवान् श्रीसर्वेश्वर श्यामसुन्दर प्रभु का मैं प्रभात समय स्मरण करता हूँ ।।२।।**

द्वितीयश्लोकेन भगवतः श्रीकृष्णस्य प्रातर्निद्रावसानवेलायाः

करमलात्रय्यादि-विशिष्टरूपं व्याख्यातम् । अथात्र तृतीय-श्लोके-नोक्तरीत्यैव युग्मस्वरूपयोः श्रीराधाकृष्णयोर्निरतिशयसौन्दर्य्यसौकुमार्य्यादिरूपं तथा केलिरसवैचित्र्यं विशिनष्टि—

**प्रातर्भजामि शयनोत्थितयुग्मरूपं**
**सर्वेश्वरं सुखकरं रसिकेशभूपम् ।**
**अन्योन्यकेलिरसचिन्हसखीदृगौघं**
**सख्यावृतं सुरतकाममनोहरञ्च ॥३॥**

प्रातर्भजामीति - **श्रीसर्वेश्वरमिति** सर्वेषामीश्वरः सर्वेश्वरस्तं सर्वेश्वरं सकलचेतनाचेतनात्मक—विश्वनियन्तारम्, "सर्वभूतान्तरात्मा अन्तः प्रविष्टः शास्ता जनानाम्" "एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य, प्रभवाप्ययौ हि भूतानाम्" इत्यादि श्रुतिभ्यः भगवतः सर्वेश्वरत्व— सर्वनियन्तृत्व-सर्वात्मत्व-सर्वव्यापकत्व- स्वतंत्रसत्त्वादिकं सिद्धम् । **सुखकरमिति** — सुखं करोतीति सुखकरस्तं सुखकरम् आनन्दकरम् । युग्मस्वरूपो भगवांस्त्वानन्दमयः "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः" "आनन्दमयोऽभ्यासात्" "सैषा आनन्दस्यमीमांसा भवति" "एष एव ह्यानन्दयाति" इत्यादिश्रुतिसूत्रेभ्यश्च तस्याऽनन्दमयत्वं प्रसिद्धम् । अत एव तदानन्दकरः श्रीसर्वेश्वरप्रभुः शरणापन्नान् पराभक्तिरतिपरायणान् परमरसिकान्भावुक—भक्तान् सर्वैरुपायैरानन्दयति नेतरान् भगवद्विमुखान् । "एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति, तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्"

"तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शान्तिं, स्थानं प्राप्स्यसि शाश्वतम्"—

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।**
**यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ।।**
**युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ।।**

इत्यादिश्रुतिस्मृतिभ्यः स्पष्टमेव । **रसिकेशभूपमिति**— रसिकानां श्रीहरिव्यासहरिदासप्रभृतीनाम्-ईशाः श्रीनारदादिदेवर्षय स्तेषां भूपोऽधिपतिरसौ तं सर्वाधिपतिम्—

**श्रियः पतिर्यज्ञपतिः प्रजापतिर्धियांपतिर्लोकपतिर्धरापतिः ।**
**पतिर्गतिश्चान्धकवृष्णिसात्वतां प्रसीदतां मे भगवान् सतां पतिः ।।**

इति भागवतवचनादपि तस्य सर्वाधिपतित्वं प्रसिद्धमेव । **अन्योन्यकेलिरसचिह्नसखीदृगौघमिति**—ययोः श्रीयुग्मरूपयोः क्रीड़ा विहाररस - चिन्हेषु पारस्परिकवसनभूषणाकुन्तलादीतस्ततो भवनात्मकेषु सखीनां नित्यसहचरीणां दृष्टिपातसमूहोऽस्ति तत् । **सख्यावृतमिति**—सखीभिरावृतः सख्यावृतस्तं सख्यावृतम्, अर्थादपरिमिताभिः श्रीरङ्गदेवीललिताविशाखा- हितुहरिप्रियादिभिः सखीभिः परिचारिकाभिः परिवृतमिति भावः ।

तथाचोक्तं श्रीवृन्दावनमाहात्म्ये—

**राधया सह गोविन्दं स्वर्णसिंहासने स्थितम् ।**
**पूर्वोक्तस्तरलावण्यं दिव्यभूषाम्बरस्रजम् ।।**
**त्रिभङ्गमञ्जुषु स्निग्धं गोपीलोचनतारकम् !**
**तद् बाह्ये योगपीठे च स्वर्णसिंहासनावते ।।**

प्रत्यङ्गरभसावेशाः प्रधानाः कृष्णवल्लभाः।
ललिताद्याः प्रकृत्यंशा मूलप्रकृतिराधिका।।
सम्मुखे ललितादेवी श्यामला वायुकोणके।
उत्तरे श्रीमती धन्या ऐशान्यां श्रीहरिप्रिया।।
विशाखा च तथा पूर्वे शैव्या चाग्नौ ततः परम्।
पद्मा च दक्षिणे पश्चान्नैर्ऋते क्रमश. स्थिता।।
योगपीठे केशराग्रे चारुचन्द्रावली प्रिया।
अष्टौ प्रकृतयः पुण्याः प्रधानाः कृष्णवल्लभाः।।
चन्द्रावली चित्ररेखा चन्द्रा परमसुन्दरी।
प्रिया च श्रीमधुमती चन्द्ररेखा हरिप्रिया।।
षोडशाद्या, प्रकृतयः प्रधानाः कृष्णवल्लभाः।
अग्रेमरास्तथा चान्याः गोपकन्याः सहस्रशः।।

इत्यादिपुराणवाक्यैस्तथा "वेदान्तकामधेनौ दशश्लोक्यामपि श्री मदाद्याचार्यचरणैः प्रतिपादित—"सखीसहस्रैः परिसेवितां सदा" इति वचनेन च तयोः सख्यावृतत्त्वं सिद्धम्। सुरत काममनोहरमिति—कामदेवादपि परमलावण्यं परमश्रेष्ठतमं सकलसौन्दर्य्यैकराशिमिति भावः। तद्यथा श्रीबृहद्गौतमीयतन्त्रे—

किशोरौ गौरश्यामाङ्गौ कोटिकन्दर्पमोहनौ।
राधाकृष्णाविति ख्यातौ वेणुना चिन्हितौ नुमः।।
मुख्याष्टसखिभिर्युक्तौ गोपिकाशतयूथपौ।
राधाकृष्णावहं वन्दे रासमण्डलमध्यगौ।।
सर्वतो मण्डले स्थाप्य मध्ये श्रीराधिकाहरी।
कोटिकन्दर्पलावण्यौ लावण्यामतमेदुरौ।।

**पीतारुणालसदवस्त्रौ श्यामगौराङ्गदम्पती ।**
**शिखिपिच्छलसन्मौल्यौ मुक्तावलिलसच्छिखौ ।।**

इत्यादिभि: प्रमाणैर्युग्मरूपस्य भगवतो निरतिशयसौन्दर्य्य-माधुर्य्यलावण्यं सुस्पष्टमेव । **शयनोत्थितयुग्मरूपमिति**- शयनात् निद्राया उत्थितं प्रबुद्धमिति शयनोत्थितम्, शयनोत्थितञ्च अदो युग्मरूपं तत्तथोक्तम् । **प्रातर्भजामि**—उषसि भजनं करोमीति संक्षेपार्थ: ।।३।।

**हिन्दी - अर्थ—शयन से उठने पर युगल सरकार श्रीप्रिया-प्रियतमजू, जो समस्त चराचर मात्र के ईश्वर हैं तथा सब को सुख देने वाले और रसिक शिरोमणियों के भी जो स्वामी हैं जिनकी पारस्परिक लीला के विहार चिन्हों में सखियों के नयनों का जहाँ सरस आकर्षण है, श्रीरंगदेवी, ललिता, विशाखादि अनन्त सखियों से समन्वित तथा जो सुन्दर क्रीड़ाओं से मन्मथ के भी मन को हरण कर रहे हैं, ऐसे उन युग्म-रूप श्रीराधामाधव का प्रात:काल में भजन करता हूँ ।।३।।**

तृतीयश्लोकेन युगलरूपस्य भगवतो लावण्यमार्दवादिरूपं सामान्यतया केलिरसवैचित्र्यञ्च प्रदर्शितम् । अथात्र तुरीयश्लोकेन तत्केलिरसस्य विशेषरूपं प्रतिपाद्यते—

**प्रातर्भजे सुरतसारपयोधिचिन्हं,**
**गण्डस्थलेन नयनेन च सन्दधानौ ।**
**रत्याद्यशेषशुभदौ समुपेतकामौ,**
**श्रीराधिकावरपुरन्दरपुण्यपुञ्जौ ।।४।।**

प्रातर्भज इति—**सुरतसारपयोधिचिन्हमिति**—परमसुन्दर-

मधुरक्रीडाया मूलमहोदधेश्चिन्हविशेषम्, **गण्डस्थलेनेति**—कपोलस्थलेन **नयनेनेति**—अक्ष्णा चकारात्कुचाभ्याञ्च **सन्दधानाविति**—धारणं कुर्वन्तौ अर्थात्नित्यनिकुञ्जदिव्ययुगलयोरुभयोः परस्परानिर्वचनीयकेलिविलासेन मिथः कपोलयोः पत्रावल्यादिलेपनं, नेत्राञ्जनस्य कपोलादौ प्रसरणञ्च भवतस्तादृशं चिन्हं धारयन्तावित्यर्थः ।

**रत्याद्यशेषशुभदाविति** रत्यादयः प्रेमभक्तिमोक्षादयो ये अशेषाः शुभाः पदार्थास्तान् दत्त इति रत्याद्यशेषशुभदौ । **समुपेतकामाविति**—सम्यक्प्रकारेण उपेताः सम्प्राप्ताः कामा याभ्यां तौ समुपेतकामौ, आप्तकामावित्यर्थः । **श्रीराधिकावरपुरन्दरपुण्यपुञ्जाविति**—पुरं दरतीति पुरन्दरः, मघवा महेशो वा तस्य यत्पुण्यं क्रतुभक्त्यादिस्वरूपं तस्य पुञ्जौ राशी, अथवा पुरन्दरौ नन्दवृषभानुनामकौ व्रजेन्द्रौ तयोर्यत्पुण्यं तत्स्वरूपावित्यर्थः । श्रीराधिका च वरश्च श्रीराधिकावरौ तौ च पुरन्दरपुण्यपुञ्जौ च श्री राधिकावरपुन्दरपुण्यपुञ्जौ । **प्रातर्भजे**—प्रभातवेलायां चिन्तयामि ।

श्लोकभावोऽयं परमान्तरङ्गनिकुञ्जरसोपासकैरष्टादशाक्षरमन्त्रप्रियैरमलान्तरात्मभिः सखीभावभावितैरेव भावनीयः । पञ्चपदीदीक्षितैरपि दुर्बलहृदयैर्न चिन्तनीयस्तैस्तु पूर्वं केवलं तयोश्चरणादिकमेव ध्येयमिति बोध्यम् ।।४।।

**हिन्दी—अर्थ—अन्तरंग लीलाओं के मूल महोदधि लीला विलास चिन्हों को कपोलस्थल एव नेत्रों द्वारा धारण करने वाले, प्रेम-भक्ति मोक्षादि अशेष शुभ पदार्थों को देने वाले एवं सम्प्राप्तकाम**

**नन्द-बृषभानु के पुण्यपुञ्ज भगवान् श्रीराधाकृष्ण को मैं प्रभात में भजता हूँ ।।४।।**

तुरीय-श्लोकेन युग्मरूपस्य भगवतः स्वरूपं निर्दिष्टमथात्र तस्य मनसैवानुभूयत्वं दर्शयन्ति पूज्यचरणाः—

**प्रातर्धरामि हृदयेन हृदीक्षणीयं,**
**युग्मस्वरूपमनिशं सुमनोहरञ्च ।**
**लावण्यधाम ललनाभिरुपेयमान,**
**मुत्थाप्यमानमनुमेयमशेषवेषैः ।।५।।**

प्रातर्धरामीति—**हृदीक्षणीयमिति**—हृदि, अन्तकरणे ईक्षणीयं दर्शनीयम् । नचाखिलान्तरात्मानौ सर्वनियन्तारौ भगवन्तौ श्रीराधासर्वेश्वरौ हृदीक्षणीयावित्येव कथं ? कथन्न दृग्गोचराविति वाच्यम् । अप्राकृतदिव्यरूपत्वात्, तथाहि सच्चिदानन्दघन-दिव्यमङ्गलविग्रहयुग्मरूपो भगवान् विशुद्धान्तः करणैरेव जनैर्दर्शनीयो नान्यैः प्राकृतनेत्रादिभिश्च । भगवत्साक्षात्कारस्तु तैरेव क्रियते यैश्च किलानारतं श्रीसर्वेश्वरप्रभुर्ध्यायते स्मर्यते च यथा— "अनन्याश्चिन्तयन्तो माम्" "सततं कीर्तयन्तो माम्" "भक्त्या त्वनन्यया शक्यः" "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु" इत्यादि श्रीभगवद्वचनाद् सुस्पष्टमेव ।

**लावण्यधाम**— इति — निरतिशयसौन्दर्य्यमाधुर्य्यलावण्यमार्दवाद्यनन्तकल्याणगुणैकनिधानम्" "यत्ते रूपं कल्याणतमं तत्ते पश्यामि" "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" "आदित्यवर्णं तमसः परस्तात्" यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं" इत्यादि श्रुतिभ्यः—

**सर्वतो मण्डले स्थाप्य मध्ये श्रीराधिकाहरी ।**
**कोटिकन्दर्पलावण्यौ लावण्यामृतमेदुरौ ।।**

इत्यादि श्रुतिपुराणवचनेभ्यस्तथा "स्वभावतोऽपास्त" "अंगे तु वामे" इत्यादि वेदान्तकामधेनु—दशश्लोक्यामपि श्रीनिम्बार्कमहामुनीन्द्रोक्त्या श्रीयुग्मरूपस्य भगवतो लावण्यधामत्वं प्रसिद्धमेव । **ललनाभिरुपेयमानमिति**—ललनाभिर्नित्यसहचरीभि: श्रीरङ्गदेवी—ललिता—विशाखादिभि: सखीभिरुपेयमानं सम्प्राप्यम् । उत्थाप्यमानमिति—उपर्युक्तललनाभि: प्रबोद्धयमानम् । अत्रायमाशय: प्रभातवेलायां ललितादय: सख्यो-निजनिजनिकुञ्जान्निसृत्य प्रमुखनित्यनिकुञ्जं समुपगम्य यत्र च श्रीप्रियाप्रियतमौ शयितौ भवतस्तत्रोपस्थाय वीणां रणयन्त्य: प्रबोधयन्तीति विज्ञेयम् । **अनुमेयमशेषवेषैरिति**—अशेषवेषै: समग्ररचनाभि:, अनुमेयम्, अनुमातुं योग्यम् । **सुमनोहरमिति**—परमसुन्दरं दिव्यमङ्गलविग्रहम् । **युग्मस्वरूपमिति**—श्रीराधामाधवौ **हृदयेनेति**—अन्त:करणेन । **अनिशमिति**—अनारतं, सततं **प्रात** इति—प्रभातवेलायां **धरामीति**—ध्यानं करोमीत्यर्थ: ।।५।।

**हृदय में ध्यान करने योग्य सौन्दर्यमाधुर्यलावण्यादि अनन्त गुणों के धाम (निधि) सहचरियों द्वारा संप्राप्य और संसेवित तथा समग्र रचनाओं द्वारा अनुमान करने योग्य, निद्रा से उठाये हुए परम सुन्दर श्रीयुगलस्वरूप का मैं अपने हृदय में निरन्तर ध्यान करता हूँ ।।५।।**

अत्राऽपि युगलकिशोरस्यैव स्वरूपविशेषं निरूपयन्ति श्रीमदाद्याचार्यचरणाः—

**प्रातर्ब्रवीमि युगलावपि सोमराजौ**
**राधामुकुन्दपशुपालसुतौ वरिष्ठौ ।**
**गोविन्दचन्द्रवृषभानुसुतावरिष्ठौ**
**सर्वेश्वरौ स्वजनपालनतत्परेशौ ।।६।।**

प्रातर्ब्रवीमिति—**सोमराजाविति**- सोमस्य यज्ञाङ्गभूतलताविशेषस्य अमृतस्य वा राजानौ अथवा परमोच्चतमचन्द्रवंशोद्भवौ । किंवा सोमस्य चन्द्रमसः राजानौ इति सौमराजौ "राजाहः सखिभ्यष्टच्" इति टच् । निकुञ्जेश्वरौ प्रियाप्रियतमौ कोटिचन्द्रादप्यधिकसौन्दर्यमाधुर्यलावण्यसम्पन्नावित्यर्थः । **राधामुकुन्दपशुपालसुताविति**—पशून् गवादीन् पालयत इति पशुपालौ वृषभानुनन्दौ तयोः सुतौ, राधा च मुकुन्दश्च राधामुकुन्दौ तौ च पशुपालसुतौ च राधामुकुन्दपशुपालसुतौ । **वरिष्ठाविति**--परमश्रेष्ठौ । **गोविन्दचन्द्रवृषभानुसुतावरिष्ठाविति**—वृषभानोः सुता वृषभानुसुता, गोविन्दश्चासौचन्द्रश्च गोविन्दचन्द्र; गोविन्दचन्द्रश्च वृषभानुसुता चेत्युभौ, वरिष्ठौ परात्परौ । अत्रैकत्र सौन्दर्यमाधुर्यलावण्याद्यन्तविग्रहधर्मेण श्रेष्ठत्वं, अपरत्र सर्वज्ञत्वाद्यात्मकधर्मेणेति न पौनरुक्त्यशङ्कावकाशः । एवमेव मुकुन्दगोविन्दयोस्तथा राधावृषभानुसुताशब्दयोः परममार्मिकार्थविशेषप्रकाशनार्थमेवप्रयुक्तत्वान्नेदं दोषावहम् । यथा मुकुन्दशब्देन मुक्तिदातृत्वस्य गोविन्दशब्देन

गोपालकत्वेन्द्रियरक्षकत्वादेश्च स्पष्टतया प्रतीति–भेदस्तथैव राधा-वृषभानुसुताशब्दयोरपि तात्त्विकार्थविशेषो ज्ञेयः। **स्वजनपालनतत्परेशाविति**––स्वजनपालनतत्परौ चामू ईशाविति स्वजनपालन-तत्परेशौ, अर्थाच्छरणागतरक्षापरायणसमर्थावितिभावः। अनन्याश्चिन्तयन्तो मां, ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां, योगक्षेमं वहाम्यहम्॥ सर्वधर्मान्परित्यज्य, मामेकं शरणं व्रज। अहं त्वा सर्व पापेभ्यो मोक्षयिष्यामि मा शुच॥ इत्यादि श्रीमुखोक्तेश्च। **सर्वेश्वराविति**—सर्वेषां कीटपतंगादारभ्य चतुर्मुखब्रह्मपर्य्यन्तानां देवानामीश्वरो नियन्तारौ, "भयादस्य अग्निस्तपति भयात्तपति सूर्यः। मृत्युर्धावति पञ्चम" "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादि श्रुतेः। श्रीप्रियाप्रियतमौ राधाकृष्णौ प्रातर्ब्रवीमि उषः काले कथयामि, अर्थात् परमपावनानि मनोहारीणि मधुराणि दिव्यानि श्रीयुगलनामानि तद्दिव्यचरित्राणि चोच्चारयामीत्यर्थः॥६॥

**चन्द्रमा से भी अत्यन्त मनोहर अथवा चन्द्रमणियों में अतिश्रेष्ठ किंवा यज्ञाङ्गभूत सोमलताविशेष अथवा अमृत के राजा, नन्दवृषभानु के परमश्रेष्ठ सुत श्रीराधा मुकुन्द गोविन्दचन्द्र और वृषभानुजा, अत्यन्त उत्कृष्ट मनोहर सकल चराचर मात्र के नियन्ता, अपने परमप्रिय शरणागतजनों के पालन में तत्पर सर्वेश्वर श्रीयुगल-सरकार के मङ्गलमय दिव्य नामों का मैं प्रातःकाल उच्चारण करता हूँ॥६॥**

तदेव स्वरूपं पुनश्च विवृणोति--

**प्रातर्नमामि युगलांघ्रिसरोजकोश-**
**मष्टाङ्गयुक्तवषुषा भवदुःखदारम् ।**
**वृन्दावने सुविचरन्तमुदारचिन्हं**
**लक्ष्म्या उरोजधृतकुङ्कुमरागपुष्टम् ॥७॥**

प्रातर्नमामीति — **वृन्दावनेसुविचरन्तमिति** -- श्रीवृन्दावन-धाम्नि सम्यक् प्रकारेण विचरणं कुर्वन्तं, **उदारचिन्हमिति**— उदाराणिसकलमनोरथप्रपूरकानि ध्वजवज्रांकुशयवशङ्खपताका-दिचिन्हानि यस्मिन् तम् । **लक्ष्म्या उरोजधृतकुंकुमरागपुष्टमिति**— लक्ष्म्याः श्रियः श्रीराधिकाया उरोजयोर्धृतं यत्कुंकुमं उरोज-धृतकुंकुमं तस्य यो रागः तेन पुष्टं विशिष्टलालित्ययुक्तम् । अथवा उरोजधृतकुंकुमेन रागः पुष्टो यस्य तत् । यद्वा उरोज-धृतकुंकुमरागस्य इव पुष्टं सुरक्षितं सुदुर्लभमिति । अथवा लक्ष्म्याः वैकुण्ठेश्वर्य्या श्रीराधिकांशभूताया उरोजयोर्व-क्षोजयोर्धृतं यत्कुंकुमं तस्य यो रागस्तेन पुष्टं सुललित-मित्यर्थः । निकुञ्जेश्वरयोः श्रीप्रियाप्रियतमयोश्चरणारविन्दं श्रीवैकुण्ठेश्वरी लक्ष्मीरपि परमप्रेम्णा स्ववक्षोजयोरुपरि धारयतीत्यर्थः । **भवदुःखदारमिति**—भवस्य, विविधविचित्र-संस्थानसम्पन्नस्य दुःखात्मकजगतः यानि दुःखानि क्लेशा ये "अविद्याऽस्मिता रागद्वेषाभिनिवेशाः पञ्चक्लेशा" सन्ति तद्वि-दारकम् । अथवा भव एव दुःख भवदुःखं तस्य दारः नाशक इति भवदुःखदारस्तं पूर्वोक्तम् । जगतीह सर्वतोऽधिकमिदमेव

दुःखं यत्पौनःपुन्येन मातुरुदरे आगमनं तत्र महद्दुःखानुभवकरणं तथा पुनः पुनरपिमरणम्, उभयत्र महतः क्लेशस्य भागवतादौ विस्तरतो वर्णनात्। "निवृत्ततर्षै" रित्यादिना भागवते तत्कथाया एव भवरोगनाशकत्वं वर्णितं का कथा तच्चरणारविन्दयोरनुरागस्येति भावः। **युगलांघ्रिसरोजकोशमिति**--श्रीराधाकृष्णचरणारविन्दम्। **अष्टाङ्गयुक्तवपुषेति**--साष्टाङ्गशरीरेण "दोर्भ्यां पद्भ्याञ्च हस्ताभ्यां उरसा शिरसा तथा। मनसा वचसा चेति, प्रणामोऽष्टाङ्गमुच्यते" इति नियमानुसारेण, अष्टाङ्गयुक्तवपुषेति प्रयुक्तम् **प्रातर्नमामि**—निशान्ते नमस्करोमीत्यर्थः ।।७।।

**श्रीवृन्दावन में विशेष रूप से विचरण करने वाले उदार अर्थात् समस्त मनोरथों को पूर्ण करने योग्य, माङ्गलिक सुभग आभूषणादि युक्त परमाह्लादिनी शक्ति श्रीराधिकाजी द्वारा निज वक्षःस्थल पर धारण किये कुंकुमरागादि से सम्पन्न अतएव विशिष्ट लालित्य समन्वित और सम्पूर्ण संसार के दुःखों को विनष्ट करने वाले श्रीयुगलकिशोर के श्रीचरणारविन्दों में अपने आठों अंगों से मैं प्रातःकाल नमस्कार करता हूँ ।।७।।**

इतः पूर्वं प्रथमश्लोकेन नित्यधाम्नः श्रीवृन्दावनस्य द्वितीयेन परब्रह्मणः श्रीकृष्णस्य च स्वरूपं ततश्च पञ्चभि-श्लोकैः श्रीयुग्मस्वरूपस्य सौन्दर्य्यमाधुर्य्यादिकं वर्णितम्, तथा च तस्य सर्वनियन्तृत्वसर्वात्मत्वसर्वव्यापकत्वसर्वाधारत्वस्वतन्त्रसत्वादिकं व्याख्यातम्। अथात्राष्टम—श्लोकेन नित्यनिकुञ्जेश्वर्याः परमाह्लादिन्याः शक्त्या वृषभानुजायाः श्रीराधिकाया वैशिष्ट्य

वदन्ति परमाराध्याः पूज्यचरणाः—

**प्रातर्नमामि वृषभानुसुतापदाब्जं**
**नेत्रालिभिः परिणुतं व्रजसुन्दरीणाम् ।**
**प्रेमातुरेण हरिणा सुविशारदेन**
**श्रीमद् व्रजेशतनयेन सदाऽभिवन्द्यम् ।।८।।**

प्रातर्नमामीति — **व्रजसुन्दरीणामिति** — व्रजवनितानाम् । **नेत्रालिभिरिति**—नेत्राणि चक्षूंषि एव अलयः पंक्तयो नेत्रालयः ताभिः नेत्रालिभिः, यद्वा नेत्राणि चक्षूंषि एव अलयो भ्रमराः नेत्रालयस्तै तथोक्तैः । **परिणुतमिति**- परिसेवितम् । **सुविशारदेनेति**—परमकुशलेन, अतिनिपुणेनेति यावत् । **प्रेमातुरेणेति** — प्रीतिपरवशेन । **हरिणेति** — ध्यातॄणां मनोहरेण किंवा तेषामेव पापं हरतीति "हरिर्हरति पापानि, दुष्टचित्तैरपि स्मृतः । अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः" इति वचनात् । ब्रह्मरुद्रेन्द्रादीनामपि हरणहेतुत्वाद्वा "ब्रह्माणमिन्द्र रुद्रं च यमं वरुणमेव च । प्रसह्य हरते यस्मात्, तस्माद्धरिरितीर्य्यते" इति वर्णनात् । भगवता श्रीमद्व्रजेशतनयेनेति—अखिलब्रह्माण्डनायकेन आनन्दकन्दनन्दनन्दनेन भगवता श्रीपुरुषोत्तमेन । **सदेति**—नित्यं, अनारतमितिभावः । **अभिवन्द्यमिति**—प्रपूज्यम् । "श्रीमद्व्रजेशतनयेन सदाऽभिवन्द्यमित्येतावतांऽशेन श्रीपुरुषोत्तमापेक्षया आह्लादिनीशक्तेः सिद्धान्तदृष्टया तारतम्यमिति कदापि नो भ्रमितव्यं तयोः "आत्मैवेदमग्र आसीत्, पुरुष-विधः स, इममेवात्मानं द्वैधाऽपातयत पतिश्च पत्नी

चाभवताम्" "येयं राधा यश्च कृष्णो रसाब्धिर्देहश्चैकः क्रीड़नार्थं द्विधाऽभूत्। देहो यथा छायया शोभमानः, शृण्वन् पठन् याति तद्धाम शुद्धम्॥" राधया सहितोदेवो माधवे न च राधिका। योऽनयोर्भेदं पश्यति स संसृतेर्मुक्तो न भवति॥" "यः कृष्णः साऽपि राधा च या राधा कृष्ण एव सा। अनयोरन्तरादर्शी संसारान्न विमुच्यते॥" तस्माज्ज्योतिरभूद्द्वेधा-राधामाधवरूपकम्।" इत्यादि श्रुतिपुराणवाक्यैस्तथा च "राधां कृष्णस्वरूपां वै कृष्णं राधास्वरूपिणं" इत्यादि वाक्यैश्च परमरसिकाचार्य – श्रीहरिव्यासदेवाचार्य – चरणैस्तयोः समानत्वैकात्मत्वैकप्राणत्वादिप्रतिपादनात्, अन्यथा स्वमतविरोधाच्च। दशश्लोक्यां "स्वभावतोऽपास्त" इत्यादिना पुरुषोत्तमतत्त्व-निरूपणानन्तरं "अनुरूपसौभगा" मित्यादिनाऽऽद्याचार्यस्य भगवतो निम्बार्काचार्यस्याऽपि तथैवेष्टत्वात्। अन्यथा सम्प्रदायविरोधापातात् शाक्तमतप्रवेशाच्च। **वृषभानुसुता-पदाब्जमिति**--वृषभानोः सुता तनया प्रेमाधिष्ठात्री श्रीवृन्दावनेश्वरी परमाह्लादिनी शक्ती श्रीराधिका तस्या पदाब्जं पदपङ्कजं चरणारविन्दं **प्रातर्नमामि**--प्रातःकाले नमामि नमस्करोमि स्वावधिकोत्कर्षाऽनुकूलव्यापारो हि नम् धात्वर्थः, व्यापारश्च करशिरः संयोगादिरूप इति भावः॥८॥

**भ्रमर रूपी व्रजगोपियों के नेत्र समूह जिनकी स्तुति करते हैं और परमचतुर प्रेमाकुल नन्दनन्दन श्रीहरि जिनकी सदा वन्दना करते हैं श्रीवृषभानुसुता श्रीराधिकाजी के उन चरण-कमलोंको मैं प्रातःकाल नमस्कार करता हूँ॥८॥**

अष्टमश्लोकेन श्रीवृषभानुजाया वैशिष्टच प्रतिपाद्यात्र नवमश्लोकेन राधाप्रियतमश्रीकृष्णचरणकमलयोः सर्वोत्तमत्त्वप्रतिपादनपूर्वकमुपसंहरतिति—

**सञ्चिन्तनीयमनुमृग्यमभीष्टदोहं**
**संसारतापशमनं चरणं महार्हम् ।**
**नन्दात्मजस्य सततं मनसा गिरा च**
**संसेवयामि वपुषा प्रणयेन रम्यम् ।।६।।**

सञ्चिन्तनीयमिति-- **अनुमृग्यमिति** ब्रह्मरुद्रेन्द्रादिभिरन्वेष्यं यद्वा साधकैर्विविधसाधनैरन्वेष्यम् । **अभिष्टदोहमिति**— सकलाभीप्सितप्रदायकं "ध्येयं सदा परिभवघ्नमभीष्टदोहम्" इति श्री मद्भागवतवचनादपि तत् स्पष्टमेव । संसारतापशमनमिति—संसरतीति संसारस्तस्य तापः, जन्ममरणादितापः किंवा, आध्यात्मिकाधिदैविकाधिभौतिकेति त्रिविधस्तापास्तेषां शमनं प्रध्वंसनम् । **महार्हमिति** – परमोत्तमं सर्वोत्कृष्टमिति यावत् । **सञ्चिन्तनीयमिति**—सम्यक्प्रकारेण ध्यानयोग्यम् । **रम्यमिति**—परमरमणीयं मनोहरं, **नन्दात्मजस्येति**—परब्रह्मणो भगवतः श्रीकृष्णस्य **चरणमिति** चरणारविन्दम् । **प्रणयेनेति**—प्रणयपूर्वकेण । **वपुषेति**– शरीरेण । **मनसेति**—चेतसा । **चेति**—अपि । **गिरेति**--वाचा । **सततमिति** – अनारतं अर्थान्निरन्तरं **संसेवयामीति**—संसेवनं करोमीति संक्षेपः ।।९।।

**ब्रह्मादि देवों द्वारा अन्वेषण किये जाने वाले अथवा विविध साधनों द्वारा अन्वेषण करने योग्य, अभिमत फल को**

देने वाले संसार के समस्त तापों के शमन अर्थात् नाश करने वाले परमोत्तम परमरमणीय सम्यक् प्रकार से ध्यान करने योग्य भगवान् श्रीश्यामसुन्दर के चरण-कमलों को मन, वाणी तथा प्रणय पूर्वक शरीर से सेवन करता हूँ ।।६।।

अथात्र दशमश्लोकेन स्तवफलन्निर्दिशति—

**प्रातःस्तवमिमं पुण्यं प्रातरुत्थाय यः पठेत् ।**
**सर्वकालं क्रियास्तस्य सफलाः स्युः सदा ध्रुवाः ।।१०।।**

प्रातः स्तवमिति—य इति—श्रीभगवद्भक्तिरतिपरायणः, यः कोऽपि नरो नारी वा **पुण्यमिति**--परमपावनम् । भगवत्कथाया भगवत्स्तोत्रस्य च "तद् वाग्विसर्गो०" इत्यादिभिर्देवर्षिणा नारदेन "वासुदेव—कथाप्रश्नः" इत्यादिना शुकेनाऽपि च सकलकलिमलनाशकत्वमनःपावनकरत्ववर्णनात् । **इममिति**--श्री आद्याचार्यचरणरचितं श्रीयुगलरूपात्मकं प्रातःस्तवं । प्रातरुत्थायेति—प्रभातवेलायां समुत्थाय । पठेदिति—पाठं कुर्यात् । **तस्येति**--साधकस्य । **सर्वकालमिति**—सर्वसमयम् । **क्रिया इति**—कर्माणि तत्फलाभिलाषो वा । **सदेति**—सर्वदंव । ध्रुवाः—निश्चयरूपेण, सफलाः— पूर्णाः, स्युः-भवेयुः, यदुद्दिश्य येन या क्रिया समारभ्यते स यदि नियमतः प्रातरिमं स्तवं पठति तर्हि तस्मै लौकिकफलावाप्तिरेव किं मुक्तिरपिसुलभास्यादिति ध्रुवशब्दाशयः । इति सुनिश्चितमिति भावः ।।१०।।

सर्वेश्वर—प्रसादेन श्रीगुरोरनुकम्पया ।
टीका निर्मापिता भक्त्या 'युग्मतत्त्वप्रकाशिका'

जो कोई भी मनुष्य इस परमपुण्यतम श्रीयुगल रूप के प्रात:कालीन स्तव का पाठ करेगा, उसकी समस्त क्रियायें, इच्छायें सर्वदा सर्व समय में सफल होंगी यह ध्रुव अर्थात् निश्चित है ।।१०।।



# आद्याचार्य के आराध्य युगल स्वरूप

श्रीसुदर्शन चक्रावतार आद्याचार्य श्रीनिम्बार्क भगवान् द्वारा विरचित 'प्रातः स्तवराजः' ग्रन्थ की "युग्मतत्त्वप्रकाशिका" नामांकित यह गूढ़तम व्याख्यात्मक टीका आद्याचार्य पादपीठाधीश्वर अनन्त श्रीविभूषित वर्तमान जगद्गुरु श्रीनिम्बार्काचार्य श्री "श्रीजी" श्रीराधासर्वेश्वरशरणदेवाचार्यजी महाराज ने प्रस्तुत की है जिसकी यह सद्यः द्वितीयावृत्ति प्रकाशित है।

रसिक हृदयशिरोमणि आचार्य प्रवर द्वारा प्रणीत इस टीका ग्रन्थ में प्रातः स्मरणीय युगल विलास के ध्यान-चिन्तन-भजन-स्मरण-आराधन-वन्दनादि विविध प्रसंगों में प्रतिपादित अगम्य, अनिर्वचनीय परमदिव्य, श्रुति-स्मृति सम्मत 'रसोवैसः' युगलरूप रसविग्रह का ज्ञान-गरिमामंडित, प्रकाण्ड पाण्डित्यपूर्ण सूक्ष्माति-सूक्ष्म-गहन-गम्भीर विवेचन हुआ है, जो सरस-सुमधुर सरल-सुबोध, प्रसादपूर्ण कलित ललित देववाणी में प्रकट हुआ है, तथा वह वस्तुतः अनन्तकोटिसूर्यसमप्रभा से आलोकित दिव्य-स्वरूप प्रियाप्रियतमजू के प्रत्यक्ष साक्षात्कार को प्रपत्तिपरक सुखानुभूति का भक्तजन हितार्थ सहज उद्घाटित स्वात्म प्रकाश है। 'युग्म-तत्वप्रकाशिका' का यह लघु-कलेवर गागर में सागरवत् रसपूरित है जिसमें रस-मर्मज्ञ भावुक भक्त हृदय में अनवरत आलोकित, रसोत्साह से पल पल में प्रवाहमान युगल रसार्णव स्थित है, यह ध्यान-धरापल्लवितकल्पतरू, रसघटसंचितअक्षयज्ञानवल्लरी प्रपन्नभावपूरित मणिमंजूषा, तत्व-चिन्तामणि, स्मरणमाल सुमेरू, युगल रस की अन्तः सलिला भक्तिभागीरथी का पावन प्रबलतम प्रवाह है।

वि० सं० २०१७ में इस 'युग्मतत्त्व प्रकाशिका' के प्रकाशन से मानों भगवान् श्रीनिम्बार्क की युगलरसोपासना के प्रचार-प्रसार निमित्त दिग्विजय का शुभारम्भ हुआ था, तदनन्तर तीसवर्षीय अन्तराल से इसकी प्रस्तुत द्वितीयावृत्ति मानो दिग्दिगन्त पर्यन्त श्रीनिम्बार्कीय भक्ति के विपुल विस्तार का द्योतक विजय-दीप का

समुज्ज्वलतम प्रकाश है। आज इसी के शुभ्र प्रकाश से मानो युगलगीतिशतकम्, श्रीसर्वेश्वरसुधाविन्दु, श्रीस्तवरत्नाञ्जलि, श्रीराधामाधवशतकम्, श्रीनिकुञ्जसौरभम्, भारतभारती वैभवम्, श्रीयुगलस्तवविंशतिः, श्रीजानकीवल्लभस्तवः, श्रीहनुमन्महिमाष्टकम्, श्रीनिम्बार्कगोपीजनवल्लभाष्टकम्, भारतकल्पतरु आदि महनीय ग्रन्थ निम्बार्क सम्प्रदाय के ख्यातिमान इतिहास के पृष्ठों पर आचार्य प्रवर के स्वर्णिम हस्ताक्षर प्रकाशमान हो रहे हैं।

'युग्मतत्त्व प्रकाशिका' वंदनीय रसिक प्रवर आचार्यश्री की रससिद्धि है जिसके चमत्कार से इस अवधि में सम्प्रदाय का चरमोत्कर्ष हुआ है। आपके प्रेरणादायी संरक्षण में विराट्-सनातनधर्म सम्मेलनों, ख्यातिमान धार्मिक-कथा-प्रवचन-यज्ञादि आयोजनों, कुम्भपर्व पर निरन्तर श्रीनिम्बार्क-नगर की संस्थापनाओं, अनेक मठमन्दिरों के भव्य भवनों के निर्माणों, रामकथामृत के विश्वविख्यात प्रवक्ता पूज्य श्रीमुरारी बापू की रामकथा का विराट् आयोजन, पारमार्थिक संस्थाओं एवं संस्कृत महाविद्यालयों के संचालनों, आचार्य चरणों द्वारा विरचित भारतभारती वैभवम् एवं भारतकल्पतरू के क्रमशः मुख्यमन्त्री तथा उपराष्ट्रपति द्वारा विमोचन, श्रीनिम्बार्कचरित आदि स्वनिर्मित फिल्मांकनों आदि अनेक यशस्वी कार्यों की उपलब्धियों से आज आचार्यपीठ एवं श्रीनिम्बार्क-सम्प्रदाय की अभूतपूर्व गौरवपूर्ण चरमोन्नति हुई है। आचार्य प्रवर का सरल सौम्य सदाचारी तपःपूत वीतरागी व्यक्तित्व तथा ज्ञान गरिमा से महामण्डित प्रतिष्ठित आचार्यत्व, भारतीय संस्कृति, देववाणी संस्कृत तथा गोमाता के संरक्षक एवं राष्ट्रीय एकता लोकतन्त्रात्मक रीतिनीति के दिशादर्शक आचार्यश्री का सर्वतोभावेन यशस्वी वर्चस्व, हमारी अक्षय निधि है, यही हमारी सुखानुभूति है।

विनीत—

**डॉ. रामप्रसाद शर्मा**

एम. ए. पी. एच.डी., किशनगढ़ (राज.)

अनन्त श्रीविभूषित जगद्गुरु निम्बार्काचार्यपीठाधीश्वर

श्री "श्रीजी"

# श्रीराधासर्वेश्वरशरणदेवाचार्यजी महाराज

## द्वारा विरचित ग्रन्थ-माला

| | | | श्लोक संख्या |
|---|---|---|---|
| १. | श्रीनिम्बार्क भगवान् कृत "प्रातः स्तवराज" पर युग्मतत्त्वप्रकाशिका नामक व्याख्या | | |
| २. | श्रीयुगलगीतिशतकम् | प्रकाशित | ११८ |
| ३. | श्री 'श्रीजी' महाराज के सदुपदेश | | |
| ४. | श्रीसर्वेश्वर सुधा-बिन्दु-[पद सं० ११८] | ,, | |
| ५. | श्रीस्तवरत्नाञ्जलि: | ,, | ३८२ |
| ६. | श्रीराधामाधवशतकम् | ,, | १०५ |
| ७. | श्रीनिकुञ्ज सौरभम् | ,, | ५८ |
| ८. | हिन्दु संघटन | ,, | |
| ९. | भारत-भारती-वैभवम् | ,, | १३५ |
| १०. | श्रीयुगलस्तवविंशति: | ,, | १८६ |
| ११. | श्रीजानकीवल्लभस्तव: | ,, | ३४ |
| १२. | श्रीहनुमन्महाष्टकम् | ,, | ९ |
| १३. | श्रीनिम्बार्कगोपीजनवल्लभाष्टकम् | ,, | १४ |
| १४. | भारत कल्पतरु [पद सं० १४६] | ,, | |
| १५. | श्रीनिम्बार्कस्तवार्चनम् | ,, | ६५ |
| | | कुल श्लोक संख्या | ११०६ |

* श्रीनिम्बार्क मुद्रणालय, निम्बार्कतीर्थ [ सलेमाबाद ] *